# श्रीदेवीमाहात्म्यम्



**Text in Sanskrit with word for word**

**Tamil Translation**

APARNA PUBLISHERS

No. 1, Goomes Street,

Madras - 600 001

॥ श्रीः ॥

॥ ओं नमश्चण्डिकायै ॥

# श्रीदेवीमाहात्म्यम्

**Text in Sanskrit with word for word**
**Tamil Translation**

By

Sri N. SOMASUNDARA DIKSHITAR

Sanskrit Pandit,

M.N.K Memorial High School, Chittilanchery.

APARNA PUBLISHERS

No. 1, Goomes Street,

Madras - 600 001

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

## பொருளடக்கம்



## श्रीदेवीमाहात्म्यम्

ॐ

शिवाभ्यां नमः

श्रीगणेशशारदागुरुभ्यो नमः

॥ ॐ नमश्चण्डिकायै ॥

# ॥ श्रीदेवीमाहात्म्यम् ॥



## नवाङ्गप्रारम्भः

---

### अथ न्यासः

अस्य श्रीन्यासमहामन्त्रस्य मार्कण्डेय ऋषिः। अनुष्टुप् छन्दः। महाकालीमहालक्ष्मीमहासरस्वत्यो देवताः। ह्रीं बीजम्। श्रीं शक्तिः। क्लीं कीलकम्। इष्टकाम्यार्थसिद्ध्यर्थे जपे विनियोगः। पादयोर्वाराह्यै नमः। जङ्घयोर्ब्रह्माण्यै नमः। ऊर्वोः रुद्राण्यै नमः। नितम्बे नारसिंह्यै नमः। नाभौ चामुण्डायै नमः। जठरे पार्वत्यै नमः। उरसि शिवदूत्यै नमः। दक्षिणभुजे वैष्णव्यै नमः। वामभुजे माहेश्वर्यै नमः। हृदये शिवायै नमः। कण्ठे माहेन्द्र्यै नमः। मुखे कात्यायन्यै नमः। शिरसि महेश्वर्यै नमः। भूमौ शाकंभर्यै नमः। अन्तरिक्षे कौशिक्यै नमः। सर्वाङ्गेषु श्रीचण्डिकायै नमः।

विन्यसेन्मूर्ध्नि कामाक्षीं दुर्गां देवीं ललाटके ।
भ्रुवोर्मध्ये भद्रकालीं चक्षुर्मध्ये महेश्वरीम् ॥ १
वाराहीं नासिकायां च कौमारीमोष्ठयोर्न्यसेत् ।
दन्तेषु नारसिंहीं च जिह्वायां चण्डिकां न्यसेत् ॥ २

श्रोत्रद्वये न्यसेद् गौरीं कण्ठमध्ये तु वैष्णवीम् ।
हृदये च महालक्ष्मीं स्तनमध्ये तु पार्वतीम् ॥ ३
वक्षःस्थले भगवतीं बाहुमूले तु शांभवीम् ।
बाहुमध्ये भद्रकालीमङ्गुलीषु च मालिनीम् ॥ ४
ब्रह्माणीं नाभिमध्ये तु कटिमध्ये तु यक्षिणीम् ।
जङ्घाद्वये तथा गौरीं जानुमध्ये तु शाङ्करीम् ॥ ५
गुल्फद्वये च मातङ्गीं विजयां पादयोस्तथा ।
चामुण्डां रोमकूपेषु चर्मादिषु च भैरवीम् ॥ ६
रुधिरादिषु चेन्द्राणीं पुष्टाङ्गीं सर्वसंधिषु ।
सर्वाङ्गेषु च वाग्देवीं पृष्ठे ज्येष्ठां न्यसेत्क्रमात् ॥ ७

इति न्यासः ॥ १ ॥

---

अथावाहनम्

मन्त्राक्षरमयीं देवीं मातृकारूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥

[इति मन्त्रेण हृदयकमलमध्ये देवीमावाह्य पञ्चोपचारं कृत्वा नामानि जपेत् ।]

इत्यावाहनम् ॥ २ ॥

---

अथ नामानि

श्रीदेवीनाम्नामगस्त्य ऋषिः । महाविराट् छन्दः । चिन्तामणिमहाविद्येश्वरी देवता । ऐं बीजम् । क्लीं शक्तिः । सौः कीलकम् । महामायाप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ध्यानम् :— अष्टौभुजाङ्गीं महिषस्य मर्दिनीं
सशङ्खचक्रां शरशूलधारिणीम् ।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदा शरणमहं प्रपद्ये ॥

ओं ऐं—

दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी ।
प्रेताशी डाकिनी काली कालरात्री निशाचरी ॥ १
झङ्कारी चोर्ध्ववेताली पिशाची भूतडामरी ।
ऊर्ध्वकेशी विरूपाक्षी शुष्काङ्गी नरभोजिनी ॥ २
राक्षसी घोररक्ताक्षी विश्वरूपी भयंकरी ।
चामुण्डी वीरकौमारी वाराही मुण्डधारिणी ॥ ३
भ्रामरी रुद्रवेताली भीष्मरी त्रिपुरान्तकी ।
भैरवी ध्वंसिनी क्रोधी दुर्मुखी प्रेतवाहिनी ॥ ४
खट्वाङ्गी दीर्घलम्बोष्ठी मालिनी मन्त्रयोगिनी ।
कौशिकी मर्दिनी यक्षी रोमजङ्घा प्रहारिणी ॥ ५
कालाग्निर्ग्रामणीश्चक्री कङ्काली भुवनेश्वरी ।
फट्कारी वीरभद्रेशी धूम्राक्षी कलहप्रिया ॥ ६
कण्टकी नाटकी मारी यमदूती करालिनी ।
सहस्राक्षी कामलोला काकदंष्ट्री ह्यधोमुखी ॥ ७
धूर्जटी विकटी घोरी कपाली विषलङ्घिनी ।
चतुःषष्टिः समाख्याता योगिन्यो वरसिद्धिदाः ॥ ८
नित्यं स्मरणमात्रेण सर्वपापक्षयो भवेत् ॥

इति नामानि ॥ ३ ॥

## अथार्गलम्

अस्य श्री अर्गलस्तोत्रमहामन्त्रस्य स्वर्णाकर्षणभैरव ऋषिः। अनुष्टुप् छन्दः। श्रीमहालक्ष्मीचण्डिका देवता। अं बीजम्। गं शक्तिः। लं कीलकम्। श्रीमहालक्ष्मीचण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः। अं गं लमित्यादिभिः षडङ्गन्यासः॥

ध्यानम्—

प्रकाशमध्यस्थितचित्स्वरूपां वराभये संदधतीं त्रिनेत्राम्।
सिन्दूरवर्णाङ्कितकोमलाङ्गीं मायामयीं तत्त्वमयीं नमामि॥

मार्कण्डेय उवाच:—

एकापि त्रिविधा ख्याता सप्तधा सैव कीर्तिता।
तस्या भेदा ह्यनन्ताश्च तन्माहात्म्यं शिवोदयम्॥ ६
या देवी स्तूयते नित्यं विबुधैर्वेदपारगैः।
सा मे वसतु जिह्वाग्रे ब्रह्मरूपा सरस्वती॥ ७
जय त्वं देवि चामुण्डे जय भूतापहारिणि।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते॥ ८
जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते॥ ९
मधुकैटभविद्रावि विधातृवरदे नमः।
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ १०
महिषासुरनिर्नाशविधात्रि वरदे नमः।
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ ११
वन्दिताङ्घ्रियुगे देवि सर्वसौभाग्यदायिनि।
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ १२

रक्तबीजवधे देवि चण्डमुण्डविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४
नतेभ्यः सर्वदा भक्त्या चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५
स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६
चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७
देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८
विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९
विधेहि देवि कल्याणं विधेहि विपुलां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २०
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१
प्रचण्डदैत्यदर्पघ्नि चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २२
चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २३

कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २४
हिमाचलसुतानाथपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २५
सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषा जहि ॥ २६
इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २७
देवि प्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २८
देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २९
पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ ३०
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३१
इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स तु सप्तशतीसंख्यावरमाप्नोति संपदः ॥ ३२
अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् ।
जपेत्सप्तशतीं पश्चात्क्रम एष शिवोदितः ॥ ३३
अर्गलं दुरितं हन्ति कीलकं फलदं तथा ।
कवचं रक्षते नित्यं चण्डिकात्रितयं पठेत् ॥ ३४

अर्गलं हृदये यस्य तथाऽनर्गलवानसौ ।
भविष्यतीति निश्चित्य शिवेन रचितं पुरा ॥ ३५
कीलकं हृदये यस्य स कीलितमनोरथः ।
भविष्यति न संदेहो नान्यथा शिवभाषितम् ॥ ३६
कवचं हृदये यस्य सर्वत्र कवची खलु ।
ब्रह्मणा निर्मितं पूर्वमिति निश्चित्य चेतसा ॥ ३७
भुक्त्वा तु सकलान् भोगानन्ते शिवपदं व्रजेत् ॥

इत्यर्गलम् ॥ ४ ॥

---

## अथ कीलकम्

अस्य श्रीकीलकस्तोत्रमहामन्त्रस्य विशुद्धज्ञान ऋषिः । अनुष्टुप् छन्दः । श्रीचण्डिका देवता । क्लां बीजम् । क्लीं शक्तिः । क्लूं कीलकम् । श्रीचण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः । क्लामित्यादिभिः षडङ्गन्यासः ॥

ध्यानम्—

शोणप्रभं सोमकलावतंसं पाणिस्फुरत्पञ्चशरेक्षुचापम् ।
प्राणप्रियं नौमि पिनाकपाणेः कोणत्रयस्थं कुलदैवतं नः ॥

ऋषिरुवाचः—

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १
सर्वमेतद्विजानीयाद् मन्त्राणामभिकीलकम् ।
सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २

सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एतेन स्तुवतां देवी स्तोत्रमात्रेण सिद्ध्यति ॥ ३
न मन्त्रो नौषधं तत्र न किंचिदपि विद्यते ।
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४
समग्राण्यपि सिद्ध्यन्ति लोके शङ्कामिमां हरः ।
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥ ५
स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ।
समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम् ॥ ६
सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः ।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७
ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।
इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८
यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् ।
स सिद्धः स गणः सोऽपि गन्धर्वो जायते नरः ॥ ९
न चैवाप्यटतस्तस्य भयं क्वापीह जायते ।
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १०
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११
सौभाग्यादि च यत्किंचिद् दृश्यते ललनाजने ।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥ १२
शनैस्तु जाप्यमानेऽस्मिंस्तोत्रे सम्पत्तिरुच्चकैः ।
भवत्येव समग्राऽपि ततः प्रारभ्यमेव तत् ॥ १३

ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसंपदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥ १४
इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स रहस्यर्चनोपेतः समस्तफलमश्नुते ॥ १५

इति कीलकम् ॥ ५ ॥

---

अथ हृदयम्

अस्य श्रीचण्डिकाहृदयस्तोत्रमहामन्त्रस्य मार्कण्डेय ऋषिः । अनुष्टुप् छन्दः । श्रीचण्डिका देवता । ह्रां बीजम् । ह्रीं शक्तिः । ह्रूं कीलकम् । श्रीचण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः । ह्रामित्यादिभिः षडङ्गन्यासः ॥

ध्यानम्—

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

ब्रह्मोवाच —

अथातः संप्रवक्ष्यामि विस्तरेण यथातथम् ।
चण्डिकाहृदयं गुह्यं शृणुष्वैकाग्रमानसः ॥

ऐं ह्रीं क्लीं, ह्रां ह्रीं ह्रूं । जय जय चामुण्डे, चण्डिके, त्रिदशमणिमकुटकोटीरसंघट्टितचरणारविन्दे, गायत्रि, सावित्रि, सरस्वति, महाहिकृताभरणे, भैरवरूपधारिणि, प्रकटितदंष्ट्रोग्रवदने, घोरे, घोरानने, ज्वलज्ज्वलज्ज्वालासहस्रपरिवृते, महाट्टहासबधिरीकृतदिगन्तरे, सर्वायुधपरिपूर्णे, कपालहस्ते, गजाजिनोत्तरीये, भूतवेतालबृन्दपरिवृते, प्रकम्पितचराचरे, मधुकैटभमहिषासुर-

धूम्रलोचनचण्डमुण्डरक्तबीजशुम्भनिशुम्भादिदैत्यनिष्कण्टके, कालरात्रि, महामाये, शिवे, नित्ये, इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानप्रधानशक्तिभूते, ब्रह्मविष्णुशिवस्तुते, त्रिभुवनाधाराधारे, वामे, ज्येष्ठे, रौद्रि, अम्बिके, ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-शङ्खिनी-वाराहीन्द्राणी-चामुण्डा-शिवदूती-महाकाली-महालक्ष्मी-महासरस्वतीस्वरूपे, नादमध्यस्थिते, महोग्रविषोरगफणामणिघटितमकुटकटकादिरत्नमहाज्वालामयपादबाहुदण्डोत्तमाङ्गे, महामहिषोपरिगन्धर्वविद्याधराराधिते, नवरत्ननिधिकोशे, तत्त्वस्वरूपे, वाक्पाणिपादपायूपस्थात्मिके, शब्दस्पर्शरूपरसगन्धादिस्वरूपे, त्वक्चक्षुःश्रोत्रजिह्वाघ्राणमहाबुद्धिस्थिते, ॐ ऐंकारह्रींकारक्लींकारहस्ते, आं क्रों आग्नेयनयनपात्रे, प्रवेशय प्रवेशय, द्रां शोषय शोषय, द्रीं सुकुमारय सुकुमारय, श्रीं सर्वं प्रवेशय प्रवेशय, त्रैलोक्यवरवर्णिनि, समस्तचित्तं वशीकुरु वशीकुरु, मम शत्रून् शीघ्रं मारय मारय, जाग्रत्स्वप्नसुषुप्त्यवस्थास्वस्मान् राजचोराग्निजलवातविषभूतशत्रुमृत्युज्वरादिस्फोटकादिनानारोगेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः परकर्ममन्त्रतन्त्रयन्त्रौषधशल्यशून्यक्षुद्रेभ्यः सम्यङ्मां रक्ष रक्ष ॥

ॐ ऐं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः, स्फ्रां स्फ्रीं स्फ्रूं स्फ्रैं स्फ्रौं स्फ्रः, मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा—

(इत्येवं बलिं दद्यात् ततः)

राजद्वारे श्मशाने वा विवादे शत्रुसङ्कटे ।
भूताग्निचोरमध्यस्थे मयि कार्याणि साधय-स्वाहा ॥

चण्डिकाहृदयं गुह्यं त्रिसन्ध्यं यः पठेन्नरः ।
सर्वकामप्रदं पुंसां भुक्ति मुक्ति प्रयच्छति ॥
इति हृदयम् ॥ ६ ॥

---

अथ दलम्

ओं नमो भगवति जय जय चामुण्डे, चण्डि, चण्डेश्वरि, चण्डायुधे, चण्डरूपधारिणि, ताण्डवप्रिये, कुण्डलीभूतदिङ्नागमण्डलीकृतगण्डस्थले, समस्तजगदण्डसंहारकारिणि, परे, अनन्तानन्दरूपे, शिवे, नरशिरोमालालंकृतवक्षःस्थले, मणिमकुटचूडावतंसचन्द्रखण्डे, महाभीषणे, देवि, महामाये, षोडशकलापरिपूर्णोल्लासिते, महादेवासुरसमरनिहतरुधिरार्द्रीकृतालम्बिततनुकमलोद्भासिताकाशे, संपूर्णरुधिरशोभितमहाकपालवक्त्रहासिनि, दृढतरनिबद्ध्यमानरोमराजीसहितहेमकाञ्चीदामोज्ज्वलितवसनारुणीभूतनूपुरप्रज्वलितमहीमण्डले, महाशंभुरूपे, महाव्याघ्रचर्माम्बरधरे, महासर्पयज्ञोपवीतिनि, महाश्मशानभस्मोद्धूलितसर्वाङ्गगात्रे, कालि, कङ्कालि, महाकालि, कालाग्निरुद्रकालि, कालसंकर्षिणि, काललनाशिनि, कालरात्रि, नभोभक्षिणि, नानाभूतप्रेतपिशाचगणसहस्रसञ्चारिणि, नानाव्याधिप्रशमनि, सर्वदुःखशमनि, सर्वदारिद्र्यनाशिनि, घगघगेत्यास्वादितमांसखण्डे, गात्रविक्षेपकलकलायमानकङ्कालधारिणि, मधुमांसरुधिरावसिक्तविलासिनि, सकलसुरासुरगन्धर्वयक्षविद्याधरकिन्नरकिंपुरुषादिभिः स्तूयमानचरिते, सर्वमन्त्राधिकारिणि, सर्वशक्तिप्रधाने, सकललोकपावनि, सकलदुरितप्रक्षालिनि, सकल-

लोकैकजननि, ब्राह्मि, माहेश्वरि, कौमरि, वैष्णवि, शङ्खिनि, वाराहि, इन्द्राणि, चामुण्डे, महालक्ष्मि, महाविद्ये, योगेश्वरि, योगिनि, चण्डिके, माये, विश्वरूपिणि, सर्वाभरणभूषिते, अतलवितलसुतलरसातलतलातलमहातलपातालादिभूर्भुवःसुवर्महर्जनस्तपःसत्याख्यचतुर्दशभुवनैकनाथे, महाक्रूरे, प्रसन्नरूपधारिणि, ओं नमः पितामहाय, ओं नमो नारायणाय, ओं नमः शिवायेति सकललोकजप्यमानब्रह्मविष्णुमहेश्वररूपिणि, दण्डकमण्डलुधारिणि, सावित्रि, सर्वमङ्गलप्रदे, सरस्वति, पद्मालये, पार्वति, सकलजगत्स्वरूपिणि, शङ्खचक्रगदापद्मधारिणि, परशुशूर्पपिनाकटङ्कधारिणि, शरचापशूलकरवालखड्गडमरुकाङ्कुशगदापरशुतोमरभिण्डिपालभुसुण्डीमुद्गरमुसलपरिघायुधदोर्दण्डसहस्रे, चन्द्रार्कवह्निनयने, इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानप्रधानशक्तिहेतुभूते, सप्तद्वीपसमुद्रोपर्युपरिव्याप्ते, ईश्वरि, महाप्रपञ्चमालालंकृतमेदिनीनाथे, महाप्रभावे, महाकैलासपर्वतोद्यानवनविहारिणि, नदीतीर्थदेवतायतनालंकृते, वसिष्ठवामदेवादिमहामुनिगणवन्द्यमानचरणारविन्दे, द्विचत्वारिंशद्वर्णमाहात्म्ये, पर्याप्तवेदवेदाङ्गाद्यनेकशास्त्राधारभूते, शब्दब्रह्ममयि, लिपिदेवते, मातृकादेवि, चिरं मां रक्ष रक्ष, मम शत्रून् हुङ्कारेण नाशय नाशय, भूतप्रेतपिशाचादीनुच्चाटयोच्चाटय, समस्तग्रहान् वशीकुरु वशीकुरु, मोहय मोहय, स्तम्भय स्तम्भय, मोदय मोदय, उन्मादयोन्मादय; विध्वंसय विध्वंसय, द्रावय द्रावय, श्रावय श्रावय, स्तोभय स्तोभय, संक्रामय संक्रामय, सकलारातीन् मूर्ध्नि स्फोटय स्फोटय, मम शत्रून् शीघ्रं मारय मारय, जाग्रत्स्वप्नसुषुप्त्यवस्था-

स्वस्मान् राजचोराग्निजलवातविषभूतशत्रुमृत्युज्वरादिनानारोगेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः परकर्ममन्त्रतन्त्रयन्त्रौषधशल्य-शून्यक्षुद्रेभ्यः सम्यङ्मां रक्ष रक्ष। ओं श्रीं ह्रीं क्ष्मौं मम शत्रुसर्व-प्राणसंहारकारिणि हुं फट् स्वाहा ॥

इति दलम् ॥ ७ ॥

---

अथ ध्यानम्

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि।
निःशेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥ १

अष्टौभुजाङ्गीं महिषस्य मर्दिनीं
सशङ्खचक्रां शरशूलधारिणीम्।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदा शरणमहं प्रपद्ये ॥ २

महिषमस्तकनृत्तविनोदनस्फुटरणन्मणिनूपुरमेखला।
जननरक्षणमोक्षविधायिनी जयतु शुम्भनिशुम्भनिषूदिनी ॥ ४

ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी।
वाराही घनघोरघर्घरमुखी दंष्ट्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः ॥ ४

उद्धतौ मधुकैटभौ महिषासुरं च निहत्य त्वं
धूम्रलोचनचण्डमुण्डरक्तबीजमुखांश्च तान्।

दुष्टशुम्भनिशुम्भमर्दिनि नन्दितामरवन्दिते
विष्टपत्रयतुष्टिकारिणि भद्रकालि नमोऽस्तु ते ॥ ५

लक्ष्मीप्रदानसमये नवविद्रुमाभां
विद्याप्रदानसमये शरदिन्दुशुभ्राम् ।
विद्वेषिवर्गविजयेऽपि तमालनीलां
देवीं त्रिलोकजननीं शरणं प्रपद्ये ॥ ६

चन्द्रहासं त्रिशूलं च शङ्खचक्रगदास्तथा ।
धनुर्बाणं च मुसलं पिङ्गलं मुष्टिमेव च ॥ ७

पाशाङ्कुशेषुबाणं च मुद्गरं परशुं तथा ।
वज्रायुधं च कुन्तं च खट्वाङ्गं च हलायुधम् ॥ ८

तूणीरं क्षुरिकां द्रोणं तोमरं पानपात्रकम् ।
प्रासपट्टसनागांश्च भुसुण्डीं वज्रदण्डके ॥ ९

दर्पणं रुद्रवीणां च बिभ्रद्द्वात्रिंशदोस्तलाम् ।
एवं स्थितां महाकालीं भजे महिषमर्दिनीम् ॥ १०

पद्मरागप्रभां देवीं बालार्ककिरणारुणाम् ।
दशपादाम्बुजां देवीं दशमण्डलपूरिताम् ॥ ११

दशाननां त्रिनेत्रां च समुन्नतपयोधराम् ।
रक्तवस्त्रपरीधानां रक्तमाल्यानुलेपनाम् ॥ १२

एवं ध्यायेन्महाज्वालां महिषासुरमर्दिनीम् ।
महासिंहाधिवाहां तां सर्वालङ्कारभूषिताम् ॥ १३

मातृकाष्टकमध्यस्थामष्टभैरवपूजिताम् ।
चिन्तामणिं महादुर्गां सर्वशत्रुविनाशिनीम् ॥ १४

ब्रह्माण्डमध्यजिह्वां तां महावक्त्रकरालिनीम् ।
शतहस्तशतां देवीं नानाशस्त्रास्त्रधारिणीम् ॥ १५
विचित्रायुधसन्नद्धां विश्वरूपां शिवात्मिकाम् ।
संपूर्णयौवनां लक्ष्मीं कालिकां कमलाननाम् ॥ १६
दानवान्तकरीं देवीं रक्तबीजवधोद्यताम् ।
रक्तवस्त्रधरां चण्डीं भीषणामतिभैरवाम् ॥ १७
महाब्रह्माण्डमालाङ्गीं सर्वाभरणभूषिताम् ।
वेतालवाहनारूढां सिंहव्याघ्रादिवाहनाम् ॥ १८
मधुकैटभसंहारीं महिषासुरमर्दिनीम् ।
चण्डमुण्डशिरश्छेत्रीं सर्वदैत्यनिषूदिनीम् ॥ १९
रक्तबीजस्य संहर्त्रीमशेषासुरभक्षिणीम् ।
निशुम्भशुम्भमथनीमशेषायुधभीषणाम् ॥ २०
नरमांसप्रियां मायां मधुमांसोपहारिणीम् ।
य इदं शृणुयान्नित्यं त्रिसन्ध्यं यः पठेन्नरः ॥ २१
ऋणकोटिपरीहारं रोगदारिद्र्यनाशनम् ।
सर्वसिद्धिमवाप्नोति सर्वकामांश्च सर्वदा ॥ २२
भक्तानन्दकरीं देवीं परब्रह्मस्वरूपिणीम् ।
इष्टकामेश्वरीं सिद्धां सर्वशक्तिसमन्विताम् ॥ २३
अष्टादशसुपीठस्थां त्रिपुरामधिदेवताम् ।
वन्दे विश्वेश्वरीं देवीं भुक्तिमुक्तिफलप्रदाम् ॥ २४
एतत्सप्तशतीध्यानं सर्वरक्षाकरं नृणाम् ।
रसं रसायनं सिद्धेद् गुलिकाञ्जनसिद्धिदम् ॥ २५

पादुकासिद्धिदं चैव खड्गसिद्धिकरं तथा ।
सिद्धसारस्वतं सिद्धं मन्त्रसिद्धिकरं तथा ॥ २६
ग्रहपीडोपशमनं सर्वसङ्कटनाशनम् ।
सौन्दर्यराजसम्मानपुत्रपौत्राभिवर्धनम् ॥ २७
ऐश्वर्यलाभविजयभुक्तिमुक्तिफलप्रदम् ।
सदा सन्निहितां लक्ष्मीं चण्डिकां मम देवताम् ॥ २८
स्मरेन्नित्यं प्रयत्नेन षण्मासात्प्राप्यते फलम् ।
महाभयापहरणं शत्रुक्षयकरं तथा ॥ २९
अचलां श्रियमाप्नोति सर्वव्याधिविनाशनम् ।
अन्ते स्वर्गं च मोक्षं च सत्यमेव न संशयः ॥ ३०
इति ध्यानम् ॥ ८ ॥

---

अथ कवचम्

अस्य श्रीदेवीकवचस्तोत्रमहामन्त्रस्य, ब्रह्मऋषिः । अनुष्टुप् छन्दः । शक्तित्रयस्वरूपिणी महालक्ष्मीर्देवता । ह्रां बीजम् । ह्रीं शक्तिः । ह्रूं कीलकम् । श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ॐ शंभुतेजो ज्वल ज्वालामालिनि पावकरोचिषे
ह्रां नन्दायै हृदयाय नमः ।
ॐ शंभुतेजो ज्वल ज्वालामालिनि पावकरोचिषे
ह्रीं नन्दायै शिरसे स्वाहा ।
ॐ शंभुतेजो ज्वल ज्वालामालिनि पावकरोचिषे
ह्रूं नन्दायै शिखायै वषट् ।

ॐ शंभुतेजोज्वल ज्वालामालिनि पावकरोचिषे
हैं नन्दायै कवचाय हुम् ।
ॐ शंभुतेजोज्वल ज्वालामालिनि पावकरोचिषे
ह्रौं नन्दायै नेत्रत्रयाय वौषट् ।
ॐ शंभुतेजोज्वल ज्वालामालिनि पावकरोचिषे
ह्रः नन्दायै अस्त्राय फट् ।
ॐ भूर्भुवःसुवरोमिति दिग्बन्धः ।

ध्यानम्

शङ्खं चक्रमथो धनुश्च दधतीं बिभ्रामितां तर्जनीं
वामे शक्तिमसिं शरान्कलयतीं तिर्यक् त्रिशूलं भुजैः ।
संनद्धां विविधायुधैः परिवृतां मन्त्रीं कुमारीजनै-
र्ध्यायेदिष्टवरप्रदां त्रिनयनां सिंहाधिरूढां शिवाम् ॥

शङ्खासिचापशरभिन्नकरां त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनुतां च दुर्गां
दूर्वानिभां दुरितवर्गहरां नमामि ॥

मार्कण्डेय उवाच—

यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १

ब्रह्मोवाच—

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २

प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूश्माण्डेति चतुर्थकम् ॥ ३
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४
नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५
अग्निना दह्यमानास्तु शत्रुमध्ये गता रणे ।
विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६
न तेषां जायते किञ्चिदशुभं रणसङ्कटे ।
नापदं तेषु पश्यामि शोकदुःखभयं न हि ॥ ७
यैस्तु भक्त्या स्तुता नूनं तेषामृद्धिः प्रजायते ।
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८
ऐन्द्रीगजसमारूढा वैष्णवी गरुडासना ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥ १०
दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ।
शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥ ११
खेटकं तोमरं चैव परशुं पाशमेव च ।
कुन्तायुधं त्रिशूलं च शार्ङ्गायुधमनुत्तमम् ॥ १२
दैत्यानां देहनाशाय भक्तानामभयाय च ।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ १३

महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ १४
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।
दक्षिणे रक्ष वाराही नैर्ऋत्यां खड्गधारिणी ॥ १५
प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ।
रक्षेदुदीच्यां कौमारी ईशान्यां शूलधारिणी ॥ १६
ऊर्ध्वं ब्रह्माणि मे रक्षादधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ॥ १७
जया मे चाग्रतः स्थातु विजया स्थातु पृष्ठतः ।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ १८
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ १९
त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २०
कपोलौ कालिका रक्षेत्कर्णमूले तु शङ्करी ।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २१
अधरे चामृतकला जिह्वायां च सरस्वती ।
दन्तान्रक्षतु कौमारी कण्ठमध्ये च चण्डिका ॥ २२
घण्टिकां चित्रघण्टा च महामाया च तालुके ।
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २३
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ।
नीलग्रीवा बहिष्कण्ठे नलिकां नलकूबरी ॥ २४

खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च ॥ २५
नखाञ्छूलेश्वरी रक्षेत्कक्षौ रक्षेन्नलेश्वरी ।
स्तनौ रक्षेन्महादेवी मनः शोकविनाशिनी ॥ २६
हृदयं ललिता देवी ह्युदरे शूलधारिणी ।
नाभिं च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा ॥ २७
भूतनाथा च मेढ्रं च गुदं महिषवाहिनी ।
कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ॥ २८
जङ्घे महाबला प्रोक्ता जानुमध्ये विनायकी ।
गुल्फयोर्नारसिंही च पादपृष्ठेऽमितौजसी ॥ २९
पादाङ्गुलीः श्रीधरी च पादाधस्तलवासिनी ।
नखान्दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३०
रोमकूपाणि कौबेरी त्वचं वागीश्वरी तथा ।
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३१
आन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३२
ज्वालामुखी नखज्वालामभेद्या सर्वसंधिषु ।
शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३३
अहङ्कारं मनो बुद्धिं रक्ष मे धर्मचारिणि ।
प्राणापानौ तथा व्यानसमानोदानमेव च ॥ ३४
यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु चक्रिणी ।
गोत्रमिन्द्राणि मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ ३५

पुत्रान्रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ।
मार्गं क्षेमङ्करी रक्षेद्विजया सर्वतः स्थिता ॥ ३६
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ।
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥ ३७
पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ।
कवचेनावृतो नित्यं यत्र यत्र हि गच्छति ॥ ३८
तत्र तत्रार्थलाभश्च विजयः सर्वकामिकः ।
यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ॥ ३९
परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ।
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥ ४०
त्रैलोक्य तु भवेत्पूज्यः कवचेनावृतः पुमान् ।
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥ ४१
यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ।
दैवी कला भवेत्तस्य त्रैलोक्ये चापराजितः ॥ ४२
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ।
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥ ४३
स्थावरं जङ्गमं चापि कृत्रिमं चापि यद्विषम् ।
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥ ४४
भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ।
सहजाः कुलजा माला डाकिनी शाकिनी तथा ॥ ४५
अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ४६

ब्रह्मराक्षसवेतालाः कूश्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ ४७
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ।
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥ ४८
जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ।
यवद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ ४९
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ ५०
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ।

इति कवचम् ॥ ९ ॥

इति नवाङ्गविधिः ॥

---

### अथ नवाक्षरीविधिः

अस्य श्रीनवाक्षरीमहामन्त्रस्य, ब्रह्मविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुभश्छन्दांसि । श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । ऐं रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि । ह्रीं नन्दाशकंभरीभीमाः शक्तयः । क्लीं अग्निर्वायुःसूर्यस्तत्त्वानि । ऋग्यजुःसामवेदा ध्यानानि । सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः । ओं ऐं अङ्गुष्ठाभ्यां नमः । ओं ह्रीं तर्जनीभ्यां नमः । ओं क्लीं मध्यमाभ्यां नमः । ओं चामुण्डायै अनामिकाभ्यां नमः । ओं विच्चे कनिष्ठिकाभ्यां नमः । ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः—एवमेव हृदयादिन्यासाः कार्याः ॥

अथ ध्यानम्

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्जितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निःशेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥
सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनी सन्निभां
शङ्खं चक्रवराभयं च दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥

पञ्चोपचारं कृत्वा मूलमन्त्रेण–'ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे नमः'—इत्यष्टोत्तरं शतं जपित्वा देव्या वामकरे निवेदयेत् ॥

इति नवाक्षरीविधिः ॥ १० ॥

अथ रात्रिसूक्तम्—(वैदिकम्)

ॐ रात्रीति सूक्तस्य कुशिकऋषिः । रात्रिर्देवता । गायत्रीच्छन्दः । श्रीजगम्बाप्रीत्यर्थे सप्तशतीपाठादौ विनियोगः ॥

ओं रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः ।
विश्वा अधि श्रियोऽधित ॥ १

ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥ २

निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥ ३

स नो॑ अ॒द्य यस्या॑ व॒यं नि ते॒ याम॒न्नवि॑क्ष्महि ।
वृ॒क्षे न व॑स॒तिं वयः॑ ॥ ४

नि ग्रामा॑सो अविक्षत॒ नि प॒द्वन्तो॒ नि प॒क्षिणः॑ ।
नि श्ये॒नास॑श्चिद॒र्थिनः॑ ॥ ५

या॒वया॑ वृ॒क्यं१ वृकं॒ य॒वय॑ स्ते॒नमू॑र्म्ये ।
अथा॑ नः सु॒तरा॑ भव ॥ ६

उप॑ मा॒ पेपि॑श॒त्तमः॑ कृ॒ष्णं व्य॑क्तमस्थित ।
उष॑ ऋ॒णेव॑ यातय ॥ ७

उप॑ ते॒ गा इ॒वाक॑रं वृणी॒ष्व दु॑हितर्दिवः ।
रात्रि॒ स्तोमं॒ न जि॒ग्युषे॑ ॥ ८

इति रात्रिसूक्तम् ॥ ११ ॥

---

अथ रात्रिसूक्तम् (पौराणिकम्)

ॐ विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १

ब्रह्मोवाच—

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ २

अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः ।
त्वमेव सा त्वं सावित्री त्वं देवजननी परा ॥ ३

त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ।
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ४

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ५

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा भगवती महादेवी महासुरी ॥ ६

प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ८

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ ९

सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ॥ १०

यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे सदा ॥ ११

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ १३

सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४

प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ १५

इति रात्रिसूक्तम् (पौराणिकम्) ॥ १२ ॥

---

अथ सप्तशतीन्यासः

अस्य श्रीप्रथममध्यमोत्तमचरितरूपसप्तशतीमालामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुभश्छन्दांसि । श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि । नन्दाशाकंभरीभीमाः शक्तयः । अग्निवायुसूर्यास्तत्त्वानि । ऋग्यजुःसामवेदा ध्यानानि । सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः—

ॐ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥
ऐं अङ्गुष्ठाभ्यां नमः ॥

ॐ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥
ह्रीं तर्जनीभ्यां नमः ॥

ॐ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥

क्लीं मध्यमाभ्यां नमः ॥

ॐ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥

ऐं अनामिकाभ्यां नमः ॥

ॐ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्वतः ॥

ह्रीं कनिष्ठिकाभ्यां नमः ॥

ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

क्लीं करतलकरपृष्ठाभ्यां नमः ॥

[ एवमेव हृदयादिन्यासाः कार्याः ]

### ध्यानम्

खड्गं चक्रगदेषुचापपरिघाञ् शूलं भुशुण्डीं शिरः
शङ्खं सन्दधतीं करैस्त्रिणयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यदशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥

घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् ।
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥

इति सप्तशतीन्यासः ॥

[इति ध्यात्वा मानसोपचारैः संपूज्य गुरुदेवतात्मैक्यं विभाव्यार्थानुसन्धानपूर्वकं मध्यमस्वरेण चण्डीस्तवं पठेत् ]



॥ श्रीः ॥

॥ ओं नमश्चण्डिकायै ॥

# ॥ श्रीदेवीमाहात्म्यम् ॥



## प्रथमचरितम् ॥

---

ॐ अस्य श्रीप्रथमचरितस्य ब्रह्मा ऋषिः । गायत्री छन्दः । महाकाली देवता । नन्दा शक्तिः । रक्तदन्तिका बीजम् । अग्निस्तत्त्वम् । ऋग्वेदो ध्यानम् । श्रीमहाकालीप्रीत्यर्थे प्रथमचरितपारायणे विनियोगः । ध्यानम्—

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

### प्रथमोऽध्यायः—முதலத்யாயம்.

### मधुकैटभवधः—மதுகைடபவதம்.

ॐ मार्कण्डेय उवाच—மார்க்கண்டேயர் கூறினார்:— 1

सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ 2

महामायानुभावेन यथा मन्वन्तराधिपः ।
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ 3

| | |
|---|---|
| य: सूर्यतनय: | எவன், ஸூர்யனின் புத்திரனை |
| सावर्णि: अष्टम: मनु: | ஸாவர்ணியென்ற எட்டாவது மனுவென்று |
| कथ्यते | சொல்லப்படுகிறானோ, |
| रवे: तनय: महाभाग: | ஸூர்யபுத்திரனும், மகா பாக்கியவானுமான |
| स: सावर्णि: | அந்த ஸாவர்ணியென்ற மனு |
| महामायानुभावेन | மகாமாயையின் பிரபாவத்தால் |
| यथा | எவ்விதம் |
| मन्वन्तराधिप: बभूव | மன்வந்தரத்தின் அதிபதியாக பவித்தானோ |
| तदुत्पत्तिं विस्तरात् | அவனது உற்பத்தியை விரிவாக |
| कथयत: मम निशामय | சொல்லுகின்ற என்னிடத்திலிருந்து கேளும். |

स्वारोचिषेऽन्तरे पूर्वं चैत्रवंशसमुद्भवः ।
सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ॥ 4

| | |
|---|---|
| पूर्वं स्वारोचिषे अन्तरे | முன்பு 'ஸ்வாரோசிஷன்' என்ற இரண்டாவது மனுவின் காலத்தில் |
| चैत्रवंशसमुद्भव: | சைத்ரவம்சத்தில் ஜனித்த |
| सुरथ: नाम | 'ஸுரதன்' என்பவர் |
| क्षितिमण्डले समस्ते | பூவுலகம் பூராவுக்கும் |
| राजा अभूत् | அரசனாக இருந்தான். |

तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान् ।
बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तथा ॥ 5

| | |
|---|---|
| प्रजा: | பிரஜைகளை |
| औरसान् पुत्रान् इव | ஔரஸபுத்திரர்களைப்போல் |
| सम्यक् पालयत: | நீதிநெறி தவறாமல் நன்றாக இரக்ஷித்துவந்த |
| तस्य तथा | அந்த அரசனுக்கு கர்வங்கொண்ட |
| कोलाविध्वंसिन: | 'கோலா' என்ற நகரில் வஸித்துவந்த |
| भूपा: शत्रव: बभूवु: | அரசர்கள் சத்ருக்களாக பவித்தார்கள். |

तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ।
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ 6

| | |
|---|---|
| अतिप्रबलदण्डिनः | மிக சக்திவாய்ந்த நான்குவித சேனைகளை யுடைய |
| तस्य | அவனுக்கு |
| तैः युद्धं अभवत् | அவர்களோடுகூட போர் நடந்தது. |
| युद्धे सः | போரில் அவன், |
| तैः कोलाविध्वंसिभिः | அந்த 'கோலாவித்வம்ஸிகள்' என்ற அரசர்களால் |
| न्यूनैः अपि | அற்பர்களாயிருந்தும் |
| जितः | ஜயிக்கப்பட்டான். |

ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ।
आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥ 7

| | |
|---|---|
| महाभागः | (மஹாமாயையின் பிரபாவத்தால் எட்டாவது மனுவாக பவிக்கும்) பாக்கியம்பெற்ற |
| सः ततः | அந்த அரசன், அதன்பிறகு |
| स्वपुरं आयातः | தனது பட்டணத்திற்கு வந்து |
| निजदेशाधिपः | தனது தேசத்திற்குமட்டும் அரசனாக |
| अभवत् | பவித்தான். |
| तदा तैः | அப்பொழுது அந்த |
| प्रबलारिभिः | மிக்க பலம்படைத்த சத்ருக்களால் |
| आक्रान्तः | ஆக்கிரமிக்கப்பட்டான். |

अमात्यैर्बलिभि र्दुष्टैर्दुर्बलस्य दुरात्मभिः ।
कोशो बलं चापहृतं तत्रापि स्वपुरे सतः ॥ 8

| | |
|---|---|
| तत्र | அவிடத்தில் |
| स्वपुरे अपि सतः | தனது பட்டணத்திலும் வஸித்துவந்த |
| दुर्बलस्य कोशः | பலம் குன்றிய அவனுடைய கஜானாவும், |
| बलं च बलिभिः दुष्टैः | சேனையும், பலசாலிகளும், துஷ்டர்களும், |

दुरात्मभिः अमात्यैः துராத்மாக்களான மந்திரிகளால்
अपहृतं அபஹரிக்கப்பட்டது.

ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ।
एकाकी हयमारुह्य जगाम गहनं वनम् ॥ 9

ततः हृतस्वाम्यः பிறகு, அரசாட்சியிழந்த
सः भूपतिः அவ்வரசன்,
मृगयाव्याजेन வேட்டையாடும் வியாஜமாக
एकाकी இதரஸஹாயமில்லாமல் ஒருவனாக
हयं आरुह्य குதிரைமீதேறிக்கொண்டு,
गहनं वनं பிரவேசிக்கமுடியாத வனத்தை
जगाम அடைந்தான்.

स तत्राश्रममद्राक्षीद् द्विजवर्यस्य मेधसः ।
प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥ 10

सः तत्र அவன் அவ்விடத்தில்
द्विजवर्यस्य பிராமணோத்தமரான
मेधसः 'மேதஸ்' என்ற முனிவருடைய
मुनिशिष्योपशोभितं முனிவராலும், சிஷ்யராலும் அலங்கரிக்கப்பட்டதும்,
प्रशान्तश्वापदाकीर्णं சாந்தங்களான துஷ்டமிருகங்கள் நிறைந்ததுமான
आश्रमं अद्राक्षीत् ஆச்ரமத்தைக் கண்டார்.

तस्थौ कञ्चित्स कालं च मुनिना तेन सत्कृतः ।
इतश्चेतश्च विचरंस्तस्मिन् मुनिवराश्रमे ॥ 11

तेन मुनिना அம்முனிவரால்
सत्कृतः सः च ஸத்காரம் செய்யப்பட்ட அவ்வரசனும்,
तस्मिन् मुनिवराश्रमे அந்த முனிச்ரேஷ்டரது ஆச்ரமத்தில்
इतः च इतः च இங்குமங்கும்

विचरन् — சுற்றிக்கொண்டு
कञ्चित् कालं तस्थौ — சில நாட்கள் இருந்தான்.

सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टचेतनः ।
मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥ 12

तदा तत्र सः — அப்பொழுது அவ்விடத்தில் அவ்வரசன்
ममत्वाकृष्टचेतनः — மமதையால் இழுக்கப்பட்ட புத்தியுடையவனுய்
अचिन्तयत् — சிந்தனை செய்தான் :
पूर्वं मत्पूर्वैः — "முந்தி எனது பூர்வீகர்களால்
पालितं तत् पुरं — பரிபாலனம் செய்யப்பட்ட அப் பட்டினம்
मया हीनं हि — என்னால் இழக்கப்பட்டது. அல்லவா!

मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा ।
न जाने स प्रधानो मे शूरो हस्ती सदामदः ॥ 13
मम वैरिवशं यातः कान् भोगानुपलप्स्यते ।

असद्वृत्तैः — "கெட்ட நடத்தையுடைய
तैः मद्भृत्यैः — அந்த எனது வேலைக்காரர்களால்
धर्मतः — நியாயமாக (தர்மமாக)
पाल्यते न वा — இரக்ஷிக்கப்படுகிறதோ இல்லையோ?
प्रधानः — முக்கியமானதும்,
सदामदः — எப்பொழுதும் மதங்கொண்டதும்,
शूरः — பராக்கிரமமுள்ளதுமான
मे सः हस्ती — எனது பிரஸித்தமான அந்த யானை
मम वैरिवशं यातः — எனது சத்ருக்களினிடத்தை அடைந்து
कान् भोगान् — எவ்வித சுகங்களைத்தான்
उपलप्स्यते — அனுபவிக்கப்போகிறதோ (என்றும்)
न जाने — நான் அறியவில்லை.

ये ममानुगता नित्यं प्रसादधनभोजनैः ॥ 14
अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम् ।

| | |
|---|---|
| नित्यं | "எப்பொழுதும் |
| प्रसादधनभोजनैः | ப்ரீதிதானம், பணம், ஆஹாரம் இவைகளால் |
| ये मम अनुगताः | எவர்கள் என்னை ஸேவித்திருந்தார்களோ, |
| ते अद्य | அவர்கள் இப்பொழுது |
| अन्यमहीभृतां | சத்ருராஜாக்களின் |
| अनुवृत्तिं कुर्वन्ति | சேவையை செய்கிறார்கள்; |
| ध्रुवं | நிச்சயம். |

असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥ 15
सञ्चितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ।
एतच्चान्यच्च सततं चिन्तयामास पार्थिवः ॥ 16

| | |
|---|---|
| अतिदुःखेन सञ्चितः | "மிகக்கஷ்டப்பட்டு சேர்த்துவைக்கப்பட்ட |
| सः कोशः | அந்த தனசமூகம், |
| असम्यग्व्ययशीलैः | வீண்செலவு செய்பவர்களும், |
| सततं व्ययं कुर्वद्भिः | எப்பொழுதும் செலவுசெய்பவர்களுமான |
| तैः क्षयं गमिष्यति | அவர்களால் நாசத்தை அடையும்." |
| पार्थिवः एतत् च | அரசன், இவ்விதமும் |
| अन्यत् च | வேறுவிதமும் (ராஜ்யத்தையிழந்த எனக்கு மறுபடி ராஜ்யம் கிடைக்குமா என்றும்) |
| सततं चिन्तयामास | எப்பொழுதும் சிந்தனை செய்தான். |

तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ।
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ 17

| | |
|---|---|
| सः तत्र | அந்த அரசன், அவ்விடத்தில் |
| विप्राश्रमाभ्याशे | முனிவரின் ஆச்ரமத்தின் பக்கத்தில் |
| एकं वैश्यं ददर्श | ஒரு வைசியனைக் கண்டான். |

सः तेन — அந்த வைசியன், அவ்வரசனால்
भो त्वं कः — 'ஐயா! நீர் யார்?
अत्र आगमने हेतुः च — இவ்விடத்தில் வருவதில் காரணந்தான்
कः पृष्टः — என்ன?' (என்று) வினவப்பட்டான்.

सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ।
इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥ 18
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥ 19

कस्मात् त्वं — 'ஏன் நீர்
सशोकः इव — துக்கமடைந்தவர்போலவும்,
दुर्मनाः इव — மனம் நொந்தவர்போலவும்
लक्ष्यसे — காணப்படுகின்றீர்!'
इति तस्य भूपतेः — என்ற அந்த அரசரின்
प्रणयोदितं — அன்புடன் கூறப்பட்ட
वचः आकर्ण्य — வசனத்தைக் கேட்டு,
तं नृपं — அந்த அரசனைப் பார்த்து
सः वैश्यः — அந்த வைசியன்
प्रश्रयावनतः — விநயத்துடன் வணங்கியவனாய்
प्रत्युवाच — பதில் சொன்னான்.

वैश्य उवाच—வைசியன் சொல்லுகிறான் :— 20

समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ॥ 21
पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ।
विहीनः स्वजनैर्दारैः पुत्रैरादाय मे धनम् ॥ 22
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ।

अहं धनिनां कुले — நான், தனவான்களது வம்சத்தில்
उत्पन्नः — ஜனித்த
समाधिः नाम वैश्यः — 'ஸமாதி' என்ற வைசியன்.

| | |
|---|---|
| असाधुभिः | துஷ்டர்களான |
| पुत्रदारैः | புத்திரர்களாலும், பத்தினியாலும் |
| धनलोभात् | தனத்தில் ஆசையால் |
| मे धनं आहृत्य | எனது தனத்தை அபஹரித்துக்கொண்டு, |
| निरस्तः च | அதிக்ஷேபம் செய்யப்பட்டவனாகவும், |
| स्वजनैः दारैः | ஸ்வஜனங்களாலும், பத்தினியாலும், |
| पुत्रैः विहीनः | புத்திரர்களாலும் விடப்பட்டவனாகவும், |
| आप्तबन्धुभिः | இஷ்டபந்துக்களாலே |
| निरस्तः | உபேக்ஷிக்கப்பட்டவனாகவும், |
| दुःखी च | அதனால் துக்கிதனாக |
| वनं अभ्यागतः | வனத்திற்கு வந்துசேர்ந்தேன். |

सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥ 23
प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ।
किं नु तेषां गृहे क्षेममक्षेमं किं नु साम्प्रतम् ॥ 24
कथं ते किं नु सद्वृत्ता दुर्वृत्ताः किं नु मे सुताः ॥ 25

| | |
|---|---|
| सः अहं | அந்த நான், |
| अत्र संस्थितः | இவ்விடத்தில் வசித்துக்கொண்டு, |
| पुत्राणां | புத்திரர்களுடையவும், |
| स्वजनानां च | பந்துக்களுடையவும், |
| दाराणां च | பத்தினியினுடையவும், |
| कुशलाकुशलात्मिकां प्रवृत्तिं | நல்ல சமாசாரத்தையும், கெட்ட சமாசாரத்தையும், |
| साम्प्रतं तेषां गृहे | இப்பொழுது அவரது கிருஹத்தில் |
| क्षेमं किं नु | க்ஷேமமதானா? என்றும், |
| अक्षेमं किं नु | க்ஷேமமில்லையா? என்றும், |
| ते मे सुताः | அந்த எனது புத்திரர்கள் |
| सद्वृत्ताः किं नु | நன்னடத்தையுடனிருக்கிறார்களா அல்லது |

दुर्वृत्ताः किं नु — துர்நடத்தையுடனிருக்கிறார்களா என்றும்
कथं — எவ்விதமிருக்கிறார்களோ என்றும்
न वेद्मि — அறியேன்.

राजोवाच—அரசன் சொல்லுகிறார் :— 26

यैर्निरस्तो भवान् लुब्धैः पुत्रदारादिभिर्धनैः ॥ 27

तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥ 28

भवान् धनैः — நீர், தன(ம் நிமித்தமாக)த்தில்
लुब्धैः — ஆசைகொண்ட
यैः पुत्रदारादिभिः — எந்த புத்திரர், பத்தினி முதலியவர்களால்
निरस्तः — விரட்டப்பட்டீரோ
तेषु भवतः मानसं — அவர்களிஷயத்தில் உம்முடைய மனம்
स्नेह किं अनुबध्नाति — அன்பை ஏன் வைக்கிறது?

वैश्य उवाच—வைசியன் சொல்லுகிறான் :— 29

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥ 30

किं करोमि न बध्नाति मम निष्ठुरतां मनः ।

भवान् अस्मद्गतं — தாங்கள், என்விஷயமாக
यथा वचः प्राह — எவ்விதம் ஒரு வார்த்தை சொன்னீர்களோ?
एतत् एवं — அதவ்விதமேதான்.
मम मनः — எனது மனம்
निष्ठुरतां न बध्नाति — கொடுமையை மேற்கொள்ளுவதில்லை.
किं करोमि — நான் என்ன செய்வேன்?

यैः सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥ 31

पतिस्वजनहार्दं च हार्दि तेष्वेव मे मनः ।

पितृस्नेहं — தந்தையினிடம் பிரீதியையும்,
पतिस्वजनहार्दं च — பதியினிடம் ப்ரீதியையும், பந்துப் ப்ரீதியை
संत्यज्य — ஒழித்து, [புத்

धनलुब्धैः यैः — தன ஆசைகொண்ட எவர்களால்
निराकृतः तेषु — நான் விரட்டப்பட்டேனோ, அவர்களிடத்தில்
मे मनः — எனது மனம்
हार्दि एव — பிரியமுள்ளதாகத்தானிருக்கிறது.

किमेतन्नाभिजानामि जानन्नपि महामते ॥ 32
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ।

महामते जानन् अपि — புத்திசாலியே! நானறிவுள்ளவனுகிலும்,
विगुणेषु बन्धुषु अपि — அன்பில்லாத பந்துக்களிடத்திலும்
यत् चित्तं — எந்த (என்) மனம்
प्रेमप्रवणं — பிரியமுள்ளதாக இருக்கின்றதோ,
एतत् किं — இதற்கு என்ன காரணம்?
न अभिजानामि — என்று நான் அறியேன்.

तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥ 33
करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ 34

तेषां कृते मे — அவர்கள்விஷயத்தில் எனக்கு
निःश्वासः — பெருமூச்சும்,
दौर्मनस्यं च जायते — மனக்கவலையும் உண்டாகிறது.
अप्रीतिषु तेषु — பிரியமில்லாத அவர்களிடத்தில்
यत् मनः निष्ठुरं न — அந்த (என்) மனம் நிஷ்டுரமாக இல்லையே;
किं करोमि — நான் என்ன செய்வேன்?

मार्कण्डेय उवाच—மார்கண்டேயர் சொல்லுகிறார்:— 35

ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ 36
समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥

विप्र ततः — ஹே! பிராமணரே! அனந்தரம்
समाधिः नाम असौ वैश्यः — ஸமாதி என்ற அந்த வைச்யனும்,
सः पार्थिवसत्तमः च — அந்த ராஜச்ரேஷ்டனும்,

तौ सहितौ அவ்விரண்டுபேர்களும் சேர்ந்து
तं मुनिं அந்த 'மேதஸ்' என்ற முனிவரை
समुपस्थितौ அடைந்தார்கள்.

कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् ॥ 37
उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ 38

तौ वैश्यपार्थिवौ तु அந்த வைச்யனும், அரசனும்,
यथान्यायं சாஸ்திரமுறைப்படியும்,
यथार्हं ஆசாரமுறைப்படியும்,
तेन அந்த முனிவரோடு
संविदं कृत्वा குசலப்ரச்னத்தைச் செய்து
उपविष्टौ உட்கார்ந்துகொண்டு
काश्चित् कथाः चक्रतुः சில வார்த்தைகள் பேசினார்கள்.

राजोवाच—அரசன் கேட்கிறார் :— 39

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥ 40
दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ।

भगवन् अहं त्वां ஹே! ஸர்வக்ஞரே! நான் தங்களிடத்தில்
एकं प्रष्टुं ஓர் (ரஹஸ்யமான) ஸங்கதி கேட்க
इच्छामि விரும்புகிறேன்.
यत् யாதொன்று
स्वचित्तायत्ततां विना என் மனதிற்கடங்காமல்
मे मनसः எனது மனதிற்கு
दुःखाय துக்கத்திற்குக் காரணமாக ஆகின்றதோ,
तत् वदस्व அதை உபதேசித்தருளவேண்டும்.

ममत्वं गतराज्यस्य राज्याङ्गेष्वखिलेष्वपि ॥ 41
जानतोऽपि यथाऽज्ञस्य किमेतन्मुनिसत्तम ।

मुनिसत्तम முனிவர்பெருமானே!
जानतः अपि அறிவுள்ளவனாக இருந்தாலும்

| | |
|---|---|
| गतराज्यस्य | அரசிழந்த (எனக்கு) |
| सकलेषु राज्याङ्गेषु अपि | ஸமஸ்த ராஜ்யாங்கங்களிலும் |
| अज्ञस्य यथा | அறிவில்லாதவனுக்குண்டாவதுபோல் |
| ममत्वं | மமதை (உண்டாகிறது); |
| किं एतत् | இதற்கு என்ன காரணம்? |

अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥ 42
स्वजनेन च सन्त्यक्तस्तेषु हार्दी तथाप्यति ।

| | |
|---|---|
| अयं च | இந்த வைச்யனும் |
| पुत्रैः दारैः | புத்திரர்களாலும், பத்தினியாலும், |
| भृत्यैः निकृतः | வேலையாட்களாலும் பீடிக்கப்பட்டு |
| उज्झितः | தியாகம் செய்யப்பட்டான். |
| तथा स्वजनेन च | அவ்விதமே தன் பந்துக்களாலும் |
| संत्यक्तः | விடப்பட்டான். |
| तथा अपि तेषु | ஆனாலும் அவர் விஷயத்தில் |
| अति हार्दी | அதிகப் பிரியமுள்ளவனாக இருக்கிறான். |

एवमेष तथाऽहं च द्वावप्यत्यन्तदुःखितौ ॥ 43
दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ।

| | |
|---|---|
| एवं एषः तथा अहं च | இவ்விதம் இவனும், அவ்விதமே நானும் |
| दृष्टदोषे | அனுபவிக்கப்பட்ட தோஷங்களையுடைய |
| विषये अपि | விஷயத்திலும் |
| ममत्वाकृष्टमानसौ | மமதைக்கு வசமான மனதையுடையவர்களாய் |
| द्वौ अपि | நாங்களிருவரும் |
| अत्यन्तदुःखितौ | மிகவும் துக்கிதர்களாக ஆகின்றோம். |

तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि ॥ 44
ममास्य च भवत्येषा विवेकान्धस्य मूढता ॥ 45

महाभाग — மஹாத்மாவே!
ज्ञानिनोः मम अस्य च — ஞானிகளான எனக்கும் இவனுக்கும்
विवेकान्धस्य — விவேகமற்றவனுடைய
एषा मूढता — இந்த முட்டாள்த்தனமும்,
मोहः अपि यत भवति — மோஹமும் எதனால் உண்டாகின்றதோ,
तत् एतत् किं — அது ஏன்?

ऋषिरुवाच—முனிவர் சொல்லுகிறார் :— 46

**ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ॥** 47
**विषयश्च महाभाग याति चैवं पृथक् पृथक् ।**

समस्तस्य जन्तोः — எல்லா பிராணிகளுக்கும்
विषयगोचरे ज्ञानं अस्ति — சப்தாதிவிஷயத்தில் அறிவு இருக்கிறது.
महाभाग विषयः च — மகாபாக்கியசாலியே! அவ்விஷயமும்,
एवं पृथक् पृथक् च याति — இவ்விதம் வெவ்வேறாக பவிக்கின்றது.

**दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथाऽपरे ॥** 48
**केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ।**

केचित् प्राणिनः — சில பிராணிகள்
दिवा अन्धाः — பகலில் குருடர்கள்.
तथा अपरे — அவ்விதமே வேறுசிலவை
रात्रौ अन्धाः — இரவில் குருடுகள்.
केचित् प्राणिनः — சில பிராணிகள்
दिवा तथा रात्रौ — பகலிலும் அவ்விதமே இரவிலும்
तुल्यदृष्टयः — ஒரேவிதமான பார்வையுடையவைகள்.

**ज्ञानिनो मनुजाः सत्यं किन्तु ते न हि केवलम् ॥** 49
**यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ।**

मनुजाः ज्ञानिनः — மனிதர்கள் ஞானிகளே.
सत्यं — இது உண்மையே.

किं तु ते केवलं नहि ஆனால், அவர்மட்டுமல்ல ஞானிகள்.
यतः ஏனென்றால்
पशुपक्षिमृगादयः सर्वे பசுக்கள், பக்ஷிகள், மிருகங்கள் முதலிய யாவும்
ज्ञानिनः हि ஞானமுள்ளவைகளே.

ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥ 50
मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ।

मृगपक्षिणां மிருகங்களுக்கும் பக்ஷிகளுக்கும்
यत् ज्ञानं யாதொரு அறிவு இருக்கிறதோ,
तत् तेषां मनुष्याणां அது அந்த மனிதர்களுக்கும் இருக்கிறது.
मनुष्याणां च மனிதர்களுக்கு
यत् எவ்விதமான அறிவு இருக்கிறதோ,
तथा அவ்விதமே
तेषां அந்த மிருகங்களுக்கும் பக்ஷிகளுக்கும்
तत् அந்தந்த ஜாதிக்குரியதாக இருக்கிறது.
अन्यत् மற்ற (ஆஹாரம், நித்திரை, பயம், மைதுனம் முதலியவைகளில்) அறிவு
उभयोः மனிதர்களுக்கும், மிருகபக்ஷிகளுக்கும்
तुल्यं ஸமானமே.

ज्ञानेऽपि सति पश्यैतान् पतङ्गाञ्छावचञ्चुषु ॥ 51
कणमोक्षादृतान् मोहात् पीड्यमानानपि क्षुधा ।

ज्ञाने सति अपि தாங்கள் புஜித்தால்த்தான் தங்கள் பசி ஆறும் என்ற அறிவு இருந்தபோதிலும்
क्षुधा பசியால்
पीड्यमानान् अपि பீடிக்கப்பட்டவையாயிருந்தாலும்
मोहात् 'மமதை' காரணமாக
शावचञ्चुषु குஞ்சுகளின் அலகுகளில்

कामभोक्षादृतान् ஆகாரத்துணுக்குகளை கொடுப்பதில் ஆசையுற்றவைகளான

एतान् पतङ्गान् पश्य இந்த பக்ஷிகளை நீர் பாரும்.

मानुषा मनुजव्याघ्र साभिलाषाः सुतान् प्रति ॥ 52
लोभात्प्रत्युपकाराय नन्वेतान् किं न पश्यसि ।

| | |
|---|---|
| मनुजव्याघ्र | மனிதச்ரேஷ்டனே! |
| मानुषाः | மனிதர்கள், |
| सुतान् प्रति | புத்திரர்கள் விஷயத்தில் |
| प्रत्युपकाराय | பிரத்யுபகாரம் செய்வதில் |
| लोभात् | ஆசைகாரணமாக |
| साभिलाषाः | ஆசையுள்ளவர்களாக இருக்கிறார்கள். |
| ननु | ஓ! அரசே! |
| एतान् किं न पश्यसि | இந்த பக்ஷிகளை நீர் பார்க்கவில்லையா? |

तथाऽपि ममतावर्ते मोहगर्ते निपातिताः ॥ 53
महामायाप्रभावेण संसारस्थितिकारिणः ।

| | |
|---|---|
| तथा अपि | அவ்விதமிருந்தாலும், |
| महामायाप्रभावेण | மஹாமாயையின் பிரபாவத்தால் |
| ममतावर्ते | 'மமதை' என்ற சுழியோடுகூடின |
| मोहगर्ते निपातिताः | மோகமாகிற படுகுழியில் தள்ளப்பட்டு |
| संसारस्थितिकारिणः | ஸம்ஸாரகாரியத்தைச் செய்துவருகிறார்கள். |

तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥ 54
महामाया हरेश्चैतत्तया संमोह्यते जगत् ।

| | |
|---|---|
| महामाया | மஹாமாயை, |
| जगत्पतेः | உலகத்திற்கதிப்தியான |
| हरेः योगनिद्रा | ஸ்ரீமஹாவிஷ்ணுவின் யோகநித்திரை. |
| तया | அந்த மஹாமாயையால் |

| | |
|---|---|
| एवव जगत् | இந்த உலகம் முடியவும் |
| संमोह्यते | நன்ருக மோகமடைவிக்கப்பட்டிருக்கிறது. |
| तत् अत्र | ஆகையால், இதுவிஷயத்தில் |
| विस्मयः न कार्यः | ஆச்சரியப்படவேண்டாம். |

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥ 55
बलादाकृष्य मोहाय महामाया प्रयच्छति ।

| | |
|---|---|
| सा भगवती | அந்த ஐசுவரியாதிகுணங்கள் நிறைந்த |
| देवी महामाया | பிரகாசியா நின்ற மஹாமாயை |
| ज्ञानिनां अपि | விவேகிகளுடையவும் |
| चेतांसि हि | அந்தக்கரணங்களேயும்கூட |
| बलात् आकृष्य | பலாத்காரமாக ஆகர்ஷித்து, |
| मोहाय प्रयच्छति | மோகத்திற்கதீனமாக செய்கிருள். |

तया विसृज्यते विश्वं त्रैलोक्यं सचराचरम् ॥ 56
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ।

| | |
|---|---|
| तया | அந்த தேவியால் |
| विश्वं सचराचरं | ஸமஸ்தமான சராசரங்களடங்கிய |
| त्रैलोक्यं विसृज्यते | மூவ்வுலகமும் ஸ்ருஷ்டிக்கப்படுகிறது. |
| सा एषा प्रसन्ना | அந்த தேவியே ஸந்துஷ்டையாகில் |
| नृणां मुक्तये | மனிதர்களுக்கு மோக்ஷத்திற்கு |
| वरदा भवति | வரத்தைக் கொடுப்பவளாக ஆகிருள். |

सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥ 57
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी । 58

| | |
|---|---|
| सनातनी सा | அழிவில்லாத அந்த தேவீ, |
| मुक्तेः हेतुभूता | மோக்ஷத்திற்கு ஹேதுவான |
| परमा विद्या | சிறந்த வித்தையாக பவிக்கிருள். |

संसारबन्धहेतुः ஸம்ஸாரபந்தத்திற்கு காரணமான அவித்தையும்,
सर्वेश्वरेश्वरी च எல்லா ஈசர்களுக்கும் ஈச்வரியும்
सा एव அந்த தேவியே.

राजोवाच—அரசன் கேட்கிறார் :— 59

भगवन् का हि सा देवी महामायेति यां भवान् ॥ 60
ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ।

भगवन् भवान् ஸ்வாமி! தேவரீர்
महामाया इति மஹாமாயையென்று
यां ब्रवीति எந்த தேவியை சொல்லுகிறீர்களோ
सा देवी का हि அந்த தேவி யார்?
सा कथं उत्पन्ना அந்த தேவி எவ்விதம் உற்பத்தியடைந்தாள்?
द्विज பிராமணோத்தமா!
अस्याः कर्म च किं அவளுடைய பிரவிருத்திதான் என்ன?

यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥ 61
तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर । 62

ब्रह्मविदां वर பிரம்மக்ஞானிகளில் உத்தமரே!
सा देवी அந்த தேவியார்
यत्प्रभावा யாதுவிதமான மஹிமையுடையவள்?
यत्स्वरूपा எவ்வித ஸ்வரூபமுடையவள்?
यदुद्भवा எதிலிருந்து உற்பத்தியானவள்?
त्वत्तः தேவரீரிடத்திலிருந்து
तत् सर्वं श्रोतुं அவையெல்லாம் கேட்க
इच्छामि நான் விரும்புகிறேன்.

ऋषिरुवाच—முனிவர் சொல்லுகிறார் :— 63

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥ 64
तथाऽपि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ।

